प्रातःसमुत्थायगुरोरामोमतिमतांवरः ॥ ८ ॥ किंचकारतदाख्याहिश्रोतुंकौतूहलंहिनः ॥ सूतउवाच ॥ ॥ शंभुंविलोक्याथततोवभाषे
रामःकथांकीर्त्तयशंकरस्य ॥ तृप्तिर्नजातामुनिवर्यशृण्वतोमहेशमाहात्म्यमघौघनाशनम् ॥ ९ ॥ ॥ शंभुरुवाच ॥ ॥ अथप्रश्नशेषस्यो
त्तरमीशभाषितंतेकीर्तयिष्यामि ॥ अन्यायोपार्जितद्रव्यैरीश्वरंयउपासतेतेव्यंगाजायंते ॥ २१० ॥ तद्यथाकश्चिद्रूपकोनामराक्षसोऽन्यायार्जितेन
द्रव्येणशंकरमाराध्यतेनैवद्रव्येणघंटामीश्वरप्रीतयेकृतवान् ॥ ११ ॥ तस्यपुत्रःसंपातिरितिख्यातः ॥ चौर्य्यार्जितैःशंकरंपूजयामास ॥ १२ ॥ तावुभावे
कस्मिन्दिवसेमप्रतुःगतौशिवलोकंवीरभद्रेणभाषितौच ॥ २१३ ॥ भोरूपकअन्यायार्जितेनद्रव्येणभवतापूजाकृताघंटादिकंचतेनभावेनव्यंगोभूत्वा
चौरगणोभविष्यसि ॥ २१४ ॥ शिवपदवचनाद्व्यक्तंनामाश्रवणात् ॥ श्रोत्रंतस्यस्वनेनध्वस्तंभवतिनोदर्शनमेतावतादेवत्वयेश्वरपूजासम्यक्कृता ॥ १५ ॥
अतोभक्तिश्चभविष्यतिवीरभद्रस्त्वनशनंनामगणंक्वचिद्विचरंतामित्यादिदेश ॥ १६ ॥ तौचतथाभूतौशिवलोकेऽतिष्ठताम् ॥ १७ ॥ ॥ शंभुरुवाच ॥
अथोपहतद्रव्यपूजाकथांहनूमतेमहेशभाषितांकथयिष्यामि ॥ १८ ॥ शृणुराघवप्रमथानांचरित्रमेकैकस्यकर्मविपाकंकथयिष्यामि ॥ १९ ॥ उपहर्ता
गगणव्याख्याक्रियतामितिहनूमत्पृष्टः ॥ ॥ शिवउवाच ॥ ॥२२० ॥ तदुपहतद्रव्यंज्ञानतोयईश्वरेऽर्पयिष्यतिएतदुक्तंज्ञानिनोऽतःशृणु ॥ २१ ॥ एषसर्वा
गस्वेदिलःसर्वकालंसर्वांगस्वेदिलःस्वेदार्द्रवसनःस्वेदसंपादितालपप्रवाहशरीरोनासाग्रनिपतितस्वेदबिंदुःस्पर्शायोग्योदृश्यते ॥ २२ ॥ सपुरास्वेदकरणेश्व
रार्चनंकृतवान् ॥ अत्रेतिहासंकीर्तयिष्यामि ॥ २३ ॥ चेकितानिरितिख्यातोब्राह्मणःकर्षकोभवत् ॥ सनित्यंकृषिमुत्पाद्यप्रातःस्नात्वाचनित्य
शः ॥ २४ ॥ मध्याह्नकालेसंप्राप्तेसंजपन्ब्राह्मणस्त्वसौ ॥ अन्नमानयमेक्षिप्रमितिभार्यामभाषत ॥ २५ ॥ तयानीतेनचान्नेनवेगेनाशिवपूजनम् ॥ कृतवानर्क
संतप्तःस्वेदिलःसर्वदैवतु ॥ २६ ॥ गंधपुष्पाक्षताद्यैश्चस्वेदबिंदुसमन्वितैः ॥ अथसायंदिनेप्राप्तेक्षालितांगःसुशोभनः ॥ २७ ॥ पूजयामासदेवेशंकालसंभव
साधनैः ॥ ममाराथमहाबुद्धिःशिवलोकंगतश्चसः ॥ २८ ॥ वीरभद्रेणचाप्युक्तोभवत्वंस्वेदिलोगणः ॥ स्वेदस्पृष्टपदार्थैश्चपुराशंभुःप्रपूजितः ॥ २९ ॥
नित्यंस्वेदसमायुक्तस्तेनस्वेदगणोभव ॥ ॥ शंभुरुवाच ॥ ॥ वीरेणाथसमादिष्टःप्रातोरामगणस्त्वयम् ॥ २३० ॥ अमुंघंटामुखंपश्यायंपुरावैश्यो
विभावसोनामधार्मिकोमहादानकर्त्तानित्यंब्राह्मणभोजनंकारयित्वाकृतानुष्ठानः प्रातःकालेशिवंनमस्कृत्यकुसुमैःसंपूज्य किंचित्प्रदेशंगोमयेनोपलिप्य
पद्मादिकमर्जयित्वादेवायसमर्प्यउपहतघंटानादंकृतवान् ॥ २३१ ॥ ॥ रामउवाच ॥ ॥ कथमुपहतघंटा ॥ २३२ ॥ ॥ शंभुरुवाच ॥ ॥ आसी

त्पुराबलःकश्चित्सोमइत्यभिविश्रुतः ॥ तस्यपुत्रश्चमंदाख्योदशवर्षवयाअभूत् ॥२३३॥ सचाग्निपक्वकुल्माषान्घंटायांप्राक्षिपन्नृप ॥ तानभक्षयदप्येषतेन चोपहताभवत् ॥ ३४ ॥ गृहीतुमथतंवैश्यंयतमानोब्रवीदिदम् ॥ अथवैश्यःस्वयंतत्रनिश्चित्यद्रव्यशोधनम् ॥ ३५ ॥ लौकिकेकृतवाँल्लोकेव्यवहारप दश्वताम् ॥ एतेनपापयोगेनगणोघंटामुखोभवत् ॥ ३६ ॥ ॥ रामउवाच ॥ ॥ द्रव्यशुद्धेर्विशुद्धासाकथंपापस्यकारणम् ॥ सम्यगुक्तंद्रव्य शुद्ध्यैकथंनद्रव्यशोधिनी ॥ ३७ ॥ ॥ शंभुरुवाच ॥ ॥ नलौकिकव्यवहृतौतवाभक्तोभविष्यति ॥ सयातिचाशिवस्थानंवक्ताचापितथा भवेत् ॥ ३८ ॥ ॥ सूतउवाच ॥ ॥ यश्चवक्तिकथामेतांसतेनसदृशोभुवि ॥ गुह्याद्गुह्यतमंविप्राःशिवज्ञानप्रदंभवेत् ॥ ३९ ॥ एतद्वःकथितंविप्राः पुण्यायुष्यतमंमहत् ॥ यइदंशृणुयाद्भक्त्याशिवलोकेमहीयते ॥ २४० ॥ पुराणवक्त्रेदातव्यंवस्त्रंगोहेमभूषणम् ॥ भूमिःसस्यफलोपेतादेयाशक्त्यनु सारतः ॥ २४१ ॥ शिवराघवसंवादंसर्वाघौघनिकृंतनम् ॥ यःपठेच्छृणुयाद्वापिसयातिपरमंपदम् ॥ २४२ ॥ इति श्रीपद्मपुराणेपातालखंडेशिवराघवसं वादेउपरिभागेराममोक्षोनामसप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥ छ ॥ समाप्तं पंचमं पातालखण्डम् ॥ ५ ॥

॥ * इति श्रीपद्मपुराणे पंचमं पातालखण्डं समाप्तम् * ॥